॥ श्रीसुब्रह्मण्याष्टोत्तरशतनामस्तोत्रम् ॥

स्कंदोगुह षण्मुखश्च फालनेत्रसुतः प्रभुः ।
पिंगलः कृत्तिकासूनुः शिखिवाहो द्विषड्भुजः ॥ १॥

द्विषण्णेत्रश्शक्तिधरः पिशिताशा प्रभंजनः ।
तारकासुरसंहारि रक्षोबलविमर्दनः ॥ २॥

मत्तः प्रमत्तोन्मत्तश्च सुरसैन्य सुरक्षकः ।
देवसेनापतिः प्राज्ञः कृपालो भक्तवत्सलः ॥ ३॥

उमासुतश्शक्तिधरः कुमारः क्रौंचधारिणः ।
सेनानीरग्निजन्मा च विशाखश्शंकरात्मजः ॥ ४॥

शिवस्वामि गणस्वामि सर्वस्वामि सनातनः ।
अनंतमूर्तिरक्षोभ्यः पार्वती प्रियनंदनः ॥ ५॥

गंगासुतश्शरोद्भूत आहूतः पावकात्मजः ।
जृंभः प्रजृंभः उज्जृंभः कमलासन संस्तुतः ॥ ६॥

एकवर्णो द्विवर्णश्च त्रिवर्णस्सुमनोहरः ।
चतुर्वर्णः पंचवर्णः प्रजापतिरहह्पतिः ॥ ७॥

अग्निगर्भश्शमीगर्भो विश्वरेतास्सुरारिहा ।
हरिद्वर्णश्शुभकरो वटुश्च पटुवेषभृत् ॥ ८॥

पूषागभस्तिर्गहनो चंद्रवर्ण कलाधरः ।
मायाधरो महामायी कैवल्य श्शंकरात्मजः ॥ ९॥

विश्वयोनिरमेयात्मा तेजोयोनिरनामयः ।
परमेष्ठी परब्रह्म वेदगर्भो विराट्सुतः ॥ १०॥

पुलिंद कन्याभर्ताच महासारस्वतवृतः ।
अश्रिताखिलदाताच चोरघ्नो रोगनाशनः ॥ ११॥

अनंतमूर्तिरानंदश्शिखंडीकृतकेतनः ।
डंभः परमडंभश्च महाडंभोवृषाकपिः ॥ १२॥

कारणोत्पत्तिदेहश्च कारणातीत विग्रहः ।
अनीश्वरोऽमृतःप्राणः प्राणायाम परायणः ॥ १३॥

विरुद्धहंत वीरघ्नो रक्तश्यामगलोऽपिच ।
सुब्रह्मण्यो गुहप्रीतः ब्रह्मण्यो ब्राह्मणप्रियः ॥ १४॥

। इति श्री सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।